॥ श्रीः ॥




# विभ्रान्तनारदम्

(नारदप्रतिवेदनम्)



(सव्यङ्ग्यं हास्यनाटकम्)

॥ श्रीः ॥

# विभ्रान्तनारदम्

## ( नारदप्रतिवेदनम् )

## (सव्यङ्ग्यं हास्यनाटकम्)




प्रणेता

आचार्य डॉ० वनेश्वरपाठकः, एम.ए. (हिन्दीसंस्कृतद्वये), डी.लिट.

राष्ट्रपतिसम्मानितः

उत्तरप्रदेशशासनेन राज्यसाहित्यपुरस्कारेण च सम्मानितः

भू. पू. संस्कृतविभागाध्यक्षः

सेंट जेवियर्स कॉलेज, राँची, बिहारः (भारतम्)

॥ १९९३ ई० ॥



# प्रास्ताविकम्

नाट्यरचना काव्यरचनाया विविधासु विधासु एका महत्त्वपूर्णा विधा अस्ति। रमणीयतायाः प्रभावशालितायाश्च दृष्ट्या तु दृश्यमिदं नाटकं काव्यम् (श्रव्यम्) अतिशय्य वर्त्तते। 'काव्येषु नाटकं रम्यम्' इति प्रसिद्धोक्तिरप्यमुमेवार्थं पुष्णाति। 'अवस्थानुकृतिर्नाट्यम्'[1] इति परिभाषितमर्थमादधानं नाटकं (श्रव्य) काव्यापेक्षया जनजीवनेन सह समधिकं सम्पृक्तं वर्त्तते। नाटकं विद्वत्समाजस्य सामान्यजनसमाजस्य च कृते समरूपमेवोपयोगि विद्यते। यां कामप्यवस्थामापन्नो जनो नाटकेन स्वमनसो विश्रामं लभते। नाट्यप्रयोजनं प्रतिपादयता आद्यनाट्याचार्येण भरतेनापि भणितम्—

"दुःखार्त्तानां श्रमार्त्तानां शोकार्त्तानां तपस्विनाम्।
विश्रामजननं लोके नाट्यमेतद् भविष्यति[2]॥"

भरतमनुसरता महाकविना कालिदासेनापि विभिन्नरुचीनां जनानां-समाराधनम् (मनोरञ्जनम्) एव नाटकस्य प्रयोजनं प्रतिपादितम्— 'नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम्[3]।'

विभिन्नरुचीनां जनानां समाराधनैकफले, त्रैलोक्यस्यास्य सर्वस्य भावानुकीर्तने, नानाभावोपपन्ने, नानावस्थान्तरात्मके, सर्वोपदेशजनने च नाट्येऽस्मिन् सर्वं ज्ञानम् सर्वं शिल्पम्, सर्वा विद्याः सर्वाः कलाः, सर्वं शास्त्रम्, श्रुतिस्मृतिप्रतिपादितं सर्वं कर्म समन्वितं वर्त्तते। यथाह भरतः—

"न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
न स योगो न तत्कर्म नाट्येऽस्मिन् यन्न विद्यते॥[4]"

अतएव नाटकं कवित्वस्य चरमोत्कर्षो मन्यते—'नाटकान्तं कवित्वम्' ति।

---

१. दशरूपकम्,१/७
२. नाट्यशास्त्रम्, १/११४
३. मालविकाग्निमित्रम्, १/४
४. नाट्यशास्त्रम्, १/१०६

सम्प्रति जनरुचेर्महत् परिवर्त्तनं सञ्जातमस्ति। जनानां हृदि पौराणिकी आस्था शिथिला सञ्जाता। अत एव पौराणिकम् ऐतिहासिकं वा ख्यातवृत्तमाधृत्य लिखितेषु संस्कृतनाटकेषु सर्वजनमनः समाराधनं सर्वजनोपयोगिता च महत्त्वपूर्णां भूमिकामाधत्तः। अस्मिन् भौतिके युगे समस्यानामनेकासामभ्युदयात् काव्यनाटकेषु समसामयिक-समास्यानां तासां समाधानानाञ्च निर्देश आवश्यक इति मत्वा आधुनिकाः साहित्यकाराः साम्प्रतिकीं युगानुरूपां प्रवृत्तिं पुरस्कृत्य काव्यनाट्यादीनां निर्माणे सम्प्रवृत्ताः सन्ति।

अस्माकं प्राक्तनानि काव्यनाटकानि यद्यपि पौराणिकानि, रामायण-महाभारतप्रसिद्धानि, लोकख्यातानि वा इतिवृत्तान्यादाय निर्मितानि सन्ति तथापि तेषु नवीनविचारोन्मेषो दृष्टिमेति। प्राचीन-शैलीं तथा पौराणिकं विषयमाधृत्य लिखितेषु प्राचीनाटकेष्वपि समसामयिकैः संविधानकैर्विचारैश्च नवीनतामाधातुं कवयो यत्नवन्तो दृश्यन्ते। 'पुराणमित्येव न साधु सर्वम्[1]' इतिक्रान्तिकारि वचो निगदतः कालिदासस्यापि पौराणिकाख्यानानां नवेषु प्रतिमानेषु रूपान्तरी-करणमभिमतं प्रतिभाति।

अधुना वैज्ञानिकाविष्काराणां विशेषतश्चलचित्राकाशवाणीदूर-दर्शनादीनां प्रभावात् परिवर्त्तितां जनमनोवृत्तिमभिलक्ष्य तस्यास्तोषार्थं नवीनं धरातलमाधृत्य नवां समस्यां समाश्रित्य च निर्मितेषु काव्यनाटकेषु युगानुगा प्रवृत्तिः परिलक्ष्यते, राष्ट्रियभावनायाः स्वरश्च मुखरो दृश्यते। काव्यतः (श्रव्यकाव्यतः) नाटकमधिकरमणीयं प्रभावपूर्णं च भवति। अतः नाटकानां शिल्पविधाने, वस्तुविन्यासे, रसनिबन्धने, आकर्षणो-त्पादने च सर्वत्र युगानुहारि नवीनत्वमपेक्षितमस्ति।

साम्प्रतं रङ्गमञ्चसौविध्यं जनमनोवृत्तिञ्चापेक्ष्य संस्कृतेऽपि स्वल्पाङ्कानां स्वल्पसमयसापेक्षाणां लघुनाटकानां निर्मितौ नाटककाराः प्रवृत्ता दृश्यन्ते। संस्कृते लिखितानि लघुनाटकानि आकाशवाण्या दूरदर्शनेन च विशेषतः प्रभावितानि सन्ति। रेडियोरूपकाणां रचनायाः प्रचलनमाकाशवाण्या एव प्रभावः। आकाशवाण्या दूरदर्शनस्य च विभिन्नकेन्द्रेभ्यः संस्कृतस्य रूपकाणि प्रतिमासं प्रसार्यन्ते प्रदर्श्यन्ते च। तयोरियं संस्कृतसेवा श्लाघ्याऽस्ति।

---

१. मालविकाग्निमित्रम्, १/२

मया रक्तदान-चाण्डालिका-विक्रान्तकर्ण-कादम्बरी-विभ्रान्तनारद-रक्षाबन्धनेत्यादीनि लघुनाटकानि लिखितानि। तत्र वैवाहिकीं समस्यामाधृत्य 'रक्तदानम्', अस्पृश्यतायाः समस्यामाधृत्य चाण्डालिका, जातिप्रथायाः समस्यामाधृत्य 'विक्रान्तकर्णम्' इत्याधुनिकसमस्यापेतं नाटकत्रयं लिखितमस्ति। समस्याप्रधानस्यास्य नाटकत्रयस्य तथा कादम्बरीनाटिकाया एवं विभ्रान्तनारदस्य (नारदप्रतिवेदनस्य) राँचीस्थाकाशवाणीकेन्द्रतः महता साफल्येन प्रसारणं सञ्जातमस्ति। एतदर्थमहं राँचीस्थाकाशवाणीकेन्द्रस्य सौजन्यस्याभारी वर्त्ते; तथा प्रयोगेऽस्मिन् भागं गृहीतवतां कलाकाराणां साधुवादान् करोमि। रक्षाबन्धनं हिन्दू-मुस्लिमसौहार्दर्पितमैतिहासिकं नाटकमस्ति।



विभ्रान्तनारदमथवा नारदप्रतिवेदनमेकं सव्यङ्ग्यं मनोरञ्जनप्रधानं लघुनाटकमस्ति। नारदमोहोऽथवा नारदविभ्रमः पौराणिकेष्वाख्यानेषु बहुधा चर्चितोऽस्ति। अस्मिन् नाटके मयाऽपि नारदस्य विभ्रम एव विषयीकृतः। 'यदा यदा हि धर्मस्य ग्लानिर्भवति, अधर्मस्याभ्युत्थानं भवति, तदा तदा सज्जनानां परित्राणाय, दुराचारिणां विनाशाय, धर्मस्य संस्थापनाय च भूमाववतरामि' इति कृतप्रतिज्ञेन भगवता विष्णुना 'इदानीं कलियुगेऽस्मिन् भूतले ममावतारस्य समयः सञ्जातोऽस्ति न वा' इति परिज्ञातुं प्रेषितो मुनिर्नारदो भारतमागत्य सर्वत्र परिभ्रमणं करोति। अधुनातनवैज्ञानिकाविष्काराणां धूमयान-वायुयान-चलचित्राकाशवाणी-दूरदर्शन-दूरभाषोपग्रहादीनां चमत्कारेण प्रभावितस्तथा जनानां प्रच्छन्नसौख्येन विस्मितश्चकितचकित इव, विभ्रान्त इव स जननिवहेषु, तीर्थस्थानेषु, मन्दिरादिधर्मस्थलेष्वपि वस्तुस्थितिं विज्ञातुं परिभ्रमति।

परन्तु सर्वत्र भारतवर्षस्य विपरीतां स्थितिं विलोक्य स भ्रान्तिमुपैति यद् भारतवर्षमिदं तदेव यत् तेन कृतयुगे त्रेतायां द्वापरे च दृष्टम्, अथवा किमप्यपरं भारतवर्षमिदमिति। इत्थं स्वकीये सर्वेक्षणे सर्वत्र भ्रान्त्या वशमुपगतो नारदो भारतीयजनानां प्रच्छन्नसुखं वास्तविकं सुखं मन्यमानः, तेषां वास्तविकीं स्थितिमनभिजानानः भारताद् वैकुण्ठं गत्वा भगवते विष्णवे स्वप्रतिवेदनमर्पयति—'भगवन्! भारतभूमाविदानीं सर्वे एव जनाः सुखिनः सन्ति, भवानपि सुखं स्वपितु, इदानीं भवतोऽवतारस्य समयो नास्ति' इति।

विश्रान्तनारदमिदं राँचीस्थाकाशवाणीकेन्द्रतो महता साफल्येन प्रसारितमस्ति। एतदर्थमहमाकाशवाण्या राँचीकेन्द्रस्य सौजन्यस्य भारमावहामि, प्रयोगेऽस्मिन् भागं गृहीतवतां कलाकाराणां धन्यवादांश्च करोमि। अन्तेऽहं यस्य सत्प्रयासेन नाटकमिदं समग्रसौन्दर्येण प्रकाशं प्राप्तं तस्य ज्योतिः प्रकाशनस्याध्यक्षस्य ग्रन्थस्यास्य प्रकाशकस्य श्री हरिहरनारायणस्य तथा राँचीस्थस्य 'एजुकेशन' मुद्रणालयस्य व्यवस्थापकस्य साधुवादान् व्याहरामि।

विजयादशमी
१९९३ खीस्ताब्दीयः अक्टूबर मासः।

विदुषामाश्रवः
वनेश्वरपाठकः

:—:o:—:

॥ श्रीः ॥

# विभ्रान्तनारदम्

(नारदप्रतिवेदनम्)

॥ प्रथमोऽङ्कः ॥

## प्रथमं दृश्यम्

सूत्रधार :—(प्रविश्य, बद्धाञ्जलिः)

नमस्त्रैलोक्यनिर्माणकवये शम्भवे यतः ।
प्रतिक्षणं जगन्नाट्यप्रयोगरसिको जनः ॥१॥
यादेवी सर्वभूतेषु भ्रान्तिरूपेण संस्थिता ।
नमस्तस्यै, नमस्तस्यै, नमस्तस्यै, नमोनमः ॥२॥
यया विश्वमिदं भाति यथार्थमिव सर्वतः ।
तथा चेदं परस्यास्ति मदीयं तद्धि वर्त्तते ॥३॥
यस्या वशं गतो लोकः सर्वमेवायथातथम् ।
वेत्ति तस्यै महाशक्त्यै भ्रान्तिदेव्यै नमोनमः ॥४॥

अये ! कृतमिदं मङ्गलाचरणम् । अनुष्ठितं च सर्वं शास्त्रीयं विधानकम् । तद् गृहिणीमाहूय पृच्छामि किं करणीयमिदानीमस्माभिरिति ॥

(नेपथ्याभिमुखमवलोक्य)

आर्ये ! गृहकार्यमवसितं चेदागम्यतां शीघ्रमेत्र ।

नटी—(प्रविश्य) आर्य ! समाप्तिं नीतमिदानीं सकलं गृहकर्म । बालकाश्च निवृत्तभोजनादिव्यापारा उद्याने कन्दुकेन क्रीडन्ति । तदिदानीमपरं करणीयमादिशतु भवान् । पूर्वमहमवगन्तुमिच्छामि—मङ्गलकर्मण्यस्मिन् भ्रान्तिदेव्याः स्तवेन तव किं प्रयोजनमासीदिति ।

सूत्र.—देवि ! तव नाम भ्रान्तिरस्ति । त्वं मे गृहदेवी । गृहदेव्याःस्तवनं विना गृहकर्म कथं सुचारुतया सम्पत्स्यते । अतो मया तव नाम्नः स्तुतिः कृता । अस्तु, जानास्येव यदत्र विदुषां समवायो वर्त्तते । विभिन्न-स्थानेभ्यः समागताः संस्कृतानुरागिणः सहृदया अत्र समवेताः सन्ति । तदेषां समेषां समाराधनाय कतमः प्रयोगोऽस्माभिरनुष्ठातव्य इति प्रष्टुमहं त्वामाकारितवानस्मि ।

नटी–आर्य ! ननु भवतैव समादिष्टं यदद्य विभ्रान्तनारदं नाम नाटकं यस्यापरं नाम नारदप्रतिवेदनमिति, प्रयोक्तव्यमस्ति, तत् कथं विस्मृतो भवान् ?

सूत्र.–देवि ! नेयं मम विस्मृतिः। इयं मे भ्रान्तिरस्ति। तव साहचर्यादहं सत्यं विभ्रान्तोऽस्मि।

नटी–मम साहचर्यात् ? मम साहचर्याद् भवान् विभ्रान्तोऽस्ति, कथमेतत् ?

सूत्र.–आर्ये ! भ्रान्तिदेवीति तव नाम। तर्हि देव्या भ्रान्त्याःसाहचर्यस्य प्रभावस्तु मयि सम्भव एव। देवि ! मम का कथा। महामायाया भ्रान्त्या वशमुपगताः सुरासुरा अपि विभ्रान्तास्तिष्ठन्ति। महामुनिं नारदमेव पश्य। कृतकामविजयस्यापि तस्य विभ्रमो जातः। अधुनाऽप्यसौ मायापतिना भगवता विष्णुना भारतं द्रष्टुं प्रहितो विभ्रान्त इव चकितचकित इव सर्वत्र परिभ्रमति। अवलोकय स इत एवाभिगच्छति। तदागच्छ, स्वं कार्यं सम्पादयावः।

नटी–यथादिशति भवान्।

(उभौ निष्क्रान्तौ)

॥ इति प्रस्तावना ॥

:—:०:—:

## द्वितीयं दृश्यम्

(नेपथ्यतो नारदस्य नारायण, नारायणेतिकीर्त्तनं वीणावादनं च श्रूयते)

नारदः–(प्रविश्य) अहं नारदः। भगवता विष्णुना समादिष्टोऽस्मि भारतवर्षस्य सर्वेक्षणं कृत्वा तस्य वृत्तान्तमवगन्तुं यदिदानीं भगवतोऽवतारस्य समयः परिस्थितिर्वा विद्यते न वेति। अस्ति मे विभवः प्रणिधानमार्गेण सर्वमवगन्तुम्। किन्तु भगवताऽहं सर्वं वृत्तान्तं प्रत्यक्षीकर्तुमादिष्टोऽस्मि। अतोऽहं स्थाने स्थाने परिभ्रमन् सर्वं

प्रत्यक्षीकरोमि। तत् प्रथममहमयोध्यानगरीं प्रविशामि। नारायण, नारायण.................. । (परिक्रम्यावलोक्यच)

(स्थानम्–अयोध्यानगरस्य चतुष्पथम्। इतस्ततो गच्छतां जनानां संमर्दः।)

इयमयोध्यानगरी। भगवतः श्रीरामचन्द्रस्य जन्मभूमिः। अत्रागतोऽहं सवाह्याभ्यन्तरं पवित्रतां गतो हृदि कमप्यपूर्वमानन्दमनुभवामि। (जनसंमर्दमवलोक्य) महानयं जनसंमर्दः। तदत्र केनापि कार्यविशेषेण भवितव्यम्। तदहमिमं सम्मुखमागच्छन्तं महात्मानं परिपृच्छामि। (महात्मानं प्रति) महात्मन्! अद्य अयोध्यायां महान् जनसमुदायो दृश्यते। सर्वे हर्षोत्फुल्लमानसाः सन्ति। अयोध्यायाः शोभाऽपि काप्यभिनवा संजाताऽस्ति। तत् किमिदम्?

महात्मा–अद्य रामजन्मभूमिस्थाने राममन्दिरस्य शिलान्यासो भविता। तस्मिन्नेव पवित्रेऽनुष्ठाने भागं ग्रहीतुं दूरादविदूराद् वा दर्शनार्थिनः साधवो, महात्मानः, धर्माचार्याः, सज्जनाश्च समागताः सन्ति। तद्धेतुकोऽयं जननिचयः।

नारदः–बाढम्। महदिदं पुण्यतमं कार्यम्। मर्यादापुरुषोत्तमो रामः समस्तमानवतायाः कल्याणार्थं भारतभूमिमवतीर्ण आसीत्। तदत्र सर्वैरेव मानवैः समभावेन सहयोगिभिः स्थातव्यम्। अहमपि तं पवित्रं शिलान्यासविधिं द्रष्टुं गच्छामि। दर्शनमिदं महते पुण्याय सम्पत्स्यते।
(नारायण, नारायणेति गायन् जनपथस्य दक्षिणभागेन चलति)

रक्षी पुरुषः–(नारदं प्रति) महात्मन्! वामं गच्छ, दक्षिणेन न गन्तव्यम्।

नारदः–(साश्चर्यम्) अये वामं गच्छ, दक्षिणेन न गन्तव्यमिति ब्रूते। अहमनुकूलमेव गच्छामि, तथाप्येष कथयति वामं गच्छ, अर्थात् प्रतिकूलं गच्छ। अहं दक्षिणस्यामेव दिशि गच्छामि, यत्र रामजन्मस्थानम्, तथाप्येष कथयति दक्षिणेन न गन्तव्यमिति। मन्ये भ्रान्तोऽयं पुरुषः। केवलः भ्रम एवास्य न अपितु दिग्भ्रमोऽप्यस्य वर्त्तते। तदेनं पुरुषमेवोपगम्य वस्तुस्थितिमवगच्छामि। (नारायण, नारायणेति गायन् पुरुषमुपगम्य) भद्र! अहं नारदोऽस्मि। भारतं द्रष्टुं

विष्णुलोकत आगतोऽस्मि। तत् प्रथममहमयोध्यामेव प्रविष्टो भगवतः श्रीरामस्य जन्मस्थाने सम्पद्यमानं मन्दिरशिलान्यासविधिं द्रष्टुं कामये। तद् वत्स! मह्यं रामजन्मस्थानमार्गं निर्दिश। येनाहं तत्स्थानदर्शनेनात्मानं कृतकृत्यं मन्ये।

रक्षी –(विचिन्त्य, आत्मगतम्) अयं कश्चन गुप्तचरः प्रतिभाति। अथवा महात्मनो रूपमाश्रितः कश्चन आतङ्कवादी जनोऽयम्, आत्मानं विष्णुलोकत आगतं नारदं कथयति। अस्तु, यथार्थंत इममभिज्ञास्ये। (प्रकाशम्) महात्मन्। भवादृशा नारदा अत्र संसारे वहवः सन्ति। भवान् विष्णुलोकत आगतोऽस्तीति कः श्रद्धास्यति भवद्वचनम्? तदहं भवन्तं परीक्षितुमिच्छामि।

नारदः–वत्स! मम परीक्षा? मादृशस्य वीतरागस्य महात्मनो महर्षिनारदस्य परीक्षा? हे भगवन्! अहं क्व आयातोऽस्मि? ऋषिभूमौ भारते वर्षे तत्राप्ययोध्यानगर्यां मम परीक्षा? सत्यमेव कलिकालोऽयम्। (नारायण, नारायणेति गायन् गन्तुमिच्छति)

रक्षी –अरे नारायणस्य वत्स! त्वं क्व यासि? सत्यं ब्रूहि त्वं कोऽसि। अन्यथा त्वामहं दण्डाधिकारिणः समीपं नेष्यामि।

नारदः–अहं सत्यं ब्रवीमि। अहं स एव सत्ययुगीनो नारदोऽस्मि। भगवता विष्णुना प्रहितो भारतभूभागं द्रष्टुमागतोऽस्मि। तत् किम् मादृशस्य महामुनेरपि परीक्षणं क्रियते! नारायण, नारायण.......

रक्षा –अद्यायोध्यायां राममन्दिरशिलान्यासः, रामजन्मभूमिमुक्तिमहोत्सवश्चास्ति। अस्मिन् पुण्ये कर्मणि केचन साम्प्रदायिका असाम्प्रदायिका वा विरोधं कर्तुं तथा आतङ्कमुत्पादायितुं यत्नवन्तः सन्ति। अतोऽत्र ये दूरत आगच्छन्ति तेषां समेषां परीक्षणं क्रियते यत् तेषां पार्श्वे किमपि घातकं वस्त्वस्ति नवा। अतः साधूनां संन्यासिनां महात्मनां चापि परीक्षणं क्रियते। अपराधे सति तेषां वन्धनमपि विधीयते।

नारदः–भद्र! भगवतो जन्मभूमेर्वन्धनं मुक्तिश्चेति विचित्रं वृत्तम्। भगवन्! अहं क्व समायातोऽस्मि? इयं सैव तव जन्मभूमि-

अयोध्या, अथवा [illegible] नगरी, यत्र तव जन्मभूमेर्बन्धनं मोक्षश्च श्रूयते। मर्यादापुरुषोत्तमः श्रीरामः समेषां जनानामाराध्योऽस्ति। तस्य मन्दिरस्य निर्माणे विरोधः ? जनानां हृदि एष कुत्सितो विचारः कथं समुदपद्यत? अत्र समागतानां धर्मात्मनाम्, साधूनाम्, संन्यासिनां च बन्धनं विधीयते। भगवन्! इयं का कथा ? अस्तु, अन्यत्र गच्छामि। अस्ति मे विभवः प्रणिधानेन सर्वमवगन्तुम्, तथापि भगवता विष्णुनाऽत्रत्यं सर्वं प्रत्यक्षीकर्तुमादिष्टोऽहं पौरवाणां राज्ञां राजधानीं हस्तिनापुरं गच्छामि।

(नारायण, नारायणेतिगायन् प्रतिष्ठते)

रक्षी –( तमग्रतोऽवरुध्य ) अयि महात्मन्! क्व गच्छसि। देहि मे किञ्चित्, ततो गमिष्यसि।

नारदः–वत्स! मत्तः किमिच्छसि ? आशीर्वादादतिरिक्तं मम पार्श्वे किमस्ति ?

रक्षी –तवाशीर्वादेन मे किमपि प्रयोजनं न। त्वादृशादेव छद्मवेशधारिणः पुरुषाल्लब्धेन पणकेनास्माकं चायपानं भवति।

नारदः–चायपानम् ? इदं चायपानं किम् ? स्वर्गलोके तु सुरापानं भवति, सोमरसपानं भवति। चायपानं तु नास्माभिः श्रुतं न वा कृतम्। तत् तव पार्श्वे पणकमस्ति चेन्मामपि चायं पायय।

रक्षी –त्वं तु ममापि गुरुः सञ्जातः। अस्तु, आगच्छ, चायपण्यस्थानं गच्छावः।

नारदः–चल वत्स! चल। त्वं भद्रोऽसि।

(उभौ चायपण्यस्थानं गच्छतः)

रक्षी –(चायविक्रेतारं प्रति) सुखराम! अस्मै महात्मने मह्यं च चायं देहि।

(सुखरामः चायपूर्णं चषकद्वयमुभाभ्यां प्रयच्छति)

नारदः–(चायं शीघ्रं पीत्वा जिह्वादाहमभिनयन्) वत्स! चायमिदमुष्णं वर्त्तते। मम जिह्वा दग्धा। तदहं चायं न पास्यामि।

रक्षी– शनैः शनैः पिब। चायमुष्णमेव पीयते।

नारदः–(चायं पिबन्तं रक्षिणं दर्शं दर्शं चायं पीत्वा) वत्स! चायं त्वतिस्वादु वर्त्तते। मम शरीरे स्फूर्तिः सञ्जाता। भूलोकस्योष्णपेयमिदं सुरलोकस्य सुरापानात् सोमरसपानाद् वा स्वादुतरं वर्त्तते। तदहमितः सुरलोकं गत्वा चायपानस्य प्रचारं करिष्यामि। (चायविक्रेतारं प्रति) सुखराम! त्वं शीघ्रं स्वर्गं गच्छ। गत्वा च तत्र चायपण्यस्थानं निर्माय चायविक्रयं कुरु। देवास्तव चायं पीत्वा प्रसन्ना भविष्यन्ति, तव महान् लाभोऽपि भविष्यति।

रक्षी –महात्मन्! इतोऽपि मधुरतरमेकमपरं पेयमस्ति।

नारदः–वत्स! किं तत्?

रक्षी –तदस्ति काफीपानम्।

नारदः–वत्स! तदपि पायय। येनाहं तस्यापि प्रचारं स्वर्गे करिष्यामि। सुखरामश्च स्वर्गं गत्वा देवानां प्रियो भविष्यति।

सुख. –(किञ्चित् कुपित इव) अरे महात्मन्! त्वं मां स्वर्गं गन्तुं कथयसि? अहं स्वर्गं गच्छामि चेत् मम परिवारस्य पालनं कथं भविष्यति?

नारदः–तर्हि त्वं सपरिवारः स्वर्गं गच्छ। अत्र मे विरोधो नास्ति।

सुख. –(कुपितः, स्थानादुत्तिष्ठन्) त्वं सपरिवारस्य मे मरणकामनां करोषि। तिष्ठ, अहं तव सर्वं महात्मत्वं दूरीकरोमि।

रक्षी –सुखराम! विरम। अयं विभ्रान्तोऽस्ति। त्यजैनम्।
(नारदं प्रति)
किन्तु चायपानानन्तरं शीघ्रमेव काफीपानं न क्रियते।

नारदः–भवतु, अन्यत्र क्वापि काफीपानं करिष्यामि। त्वादृशः कश्चन भक्तस्तत्रापि मिलिष्यति। तद् गच्छाम्यहम्। त्वं चिरं जीव, प्रचुरं चायं पिब।

उष्णपेयमिदं चायं सुलभं चेद् दिवौकसाम् ।
विहाय सोमपानं ते सेविष्यन्तेऽनिशं न्विदम् ।।५।।
मादृशानां तु साधूनां सर्वत्र भ्रमतामिदम् ।
सदैव सुलभं भूयाद् भक्तानां कृपया प्रभो ।।६।।
(नारायण, नारायणेति गायन् प्रतिष्ठते । )

:—:०:—:

## तृतीयं दृश्यम्

(स्थानम्–दिल्ली नगरम् । एकत्र दूरदर्शनचित्रदर्शने निरतो जननिवहो दृश्यते । नारदो नारायण, नारायणेति गायन् तत्र गच्छति ।)

एकः पुरुषः–(नारदस्य नारायणकीर्त्तनमाकर्ण्य किञ्चित् कुपित इव) अरे नारायणस्य वत्स ! अस्माभिर्दूरदर्शनं दृश्यते । त्वञ्चात्र नारायण, नारायणेत्यारटसि । अत्र तूष्णींतिष्ठ, गच्छ वाऽपरत्र ।

नारदः–वत्स ! इदं दूरदर्शनं किम् ? अत्र किं पश्यथ यूयम् ?

पुरुषः–दूरदर्शनमिदमेकं यन्त्रमस्ति । इदमाधुनिकविज्ञानस्यैकश्चमत्कारपूर्ण आविष्कारः । अस्मिन् यन्त्रे दूरस्थितं वस्तु, दूरे घटमाना काचन घटना वा प्रत्यक्षं दृश्यते । दूरस्थितं दृश्यं पुरतो विद्यमानमिव दृष्टिमेति । किं बहुना, नृत्यगीतादिकं सर्वमेवात्र पुरतो जायमानमिव प्रत्यक्षीकर्तुं शक्यते ।

नारदः–आश्चर्यमिदम् ! पूर्वं तु मर्त्यलोके केचन एव पुरुषा दिव्यदृष्टिसम्पन्ना आसन्, ये दूरस्थितं वस्तु पुरः स्थितमिव पश्यन्ति स्म । यथा त्रेतायुगे कालनेमिनामा राक्षस एवंतादृशदिव्यदृष्टिमापन्नो दूरस्थ एव रामरावणयोर्युद्धमवलोकयति स्म । द्वापरे सञ्जय एव दिव्यदृष्ट्या महाभारतं पश्यंस्तद् वृत्तान्तं धृतराष्ट्रं श्रावयति

[illegible] एवं भगवतः श्रीकृष्णस्य कृपापात्रमर्जुनस्तस्माद् दिव्य-दृष्टिं प्राप्य तस्य विश्वरूपं ददर्श। किन्तु भारते त्विदानीं सर्वं एव जना दिव्यदर्शनसम्पन्नाः सन्तीति विस्मयकारि वृत्तम्। देवा अपीदमाकर्ण्य विस्मिता भविष्यन्ति। अस्तु, वत्स! अहमपि दूरदर्शनं द्रष्टुमिच्छामि। इदानीमत्र किं भवति ?

पुरुषः–अद्य विज्ञानभवने चलचित्रकलाकाराणां सम्मेलनं सम्पद्यते। तेषां कार्यक्रमोऽस्माभिर्दूरदर्शने प्रत्यक्षीक्रियते।

नारदः–वत्स! इदं चलचित्रं किंनाम ?

पुरुषः–(नारदं साश्चर्यं विलोक्य) त्वं कोऽसि, कुत आयासि, क्व यास्यसि ?

नारदः–वत्स! अहं नाम्ना नारदोऽस्मि, विष्णुलोकत आयातोऽस्मि। भारतवर्षं द्रष्टुमितस्ततो भ्रमामि।

पुरुषः–महात्मन्! दिल्लीनगरीयम्। अत्र त्वादृशां कलहप्रियाणां नारदानामभावो नास्ति। व्यर्थमेवात्र त्वया आगमनस्य कष्ट-मङ्गीकृतम्। अस्तु, आगत एव त्वम् तदा द्वित्राणि दिनान्यत्र कस्मिंश्चिन्मन्दिरे तिष्ठ, चलचित्रस्यापि परिज्ञानं तव भवि-ष्यति। इदानीं ममाग्रे स्थितो दूरदर्शनं पश्य।

नारदः–तथास्तु।
(तदग्रे स्थितः पश्यन् परावृत्त्य पुरुषं प्रति)

नारदः–भद्र! अयमतीव श्लाघनीयामभिनयकलां प्रदर्शयन् पुरुषः कः ?

पुरुषः–एष दिलीपकुमारः।

नारदः–दिलीपकुमारः ? दिलीपस्य कुमारस्तु वीरवरो रघुरासीत्, स त्वभिनेता नासीत्।

पुरुषः–अयं दिलीपकुमारो रघुर्न। अयं चलचित्रजगति सर्वाधिकख्याति-मापन्नो दिलीपकुमारनामाऽभिनेताऽस्ति। तदिदं पश्य।

नारदः–(दृष्ट्वा पुनः पुरुषं प्रति) वत्स ! इयमप्सराः का ?


पुरुषः –इयं काचिदप्सरा नास्ति। इयं वैजयन्तीमाला नाम्नी अभिनेत्री अस्ति।

नारदः–अहन्तु जाने, उर्वशीतोऽप्यधिकमुन्मादयितृ रूपं बिभ्रती काचिद-पूर्वसुन्दरी अप्सरा अस्ति। वैजयन्तीमालातु कृष्णस्य कण्ठे स्थिताऽऽसीदियं तु सर्वेषां कण्ठे स्थितेति प्रतीयते।

पुरुषः –एवमेव।

नारदः–( तां स्निग्धेन चक्षुषा पश्यन् परावृत्त्य पुरुषं प्रति ) वत्स ! इयमपरा का ?

पुरुषः –श्रीदेवीरस्ति।

नारदः–श्रीदेवी ? किं देवी लक्ष्मीः ?

पुरुषः –न हि। इयं श्रीदेवीत्याख्यां ख्यातिमापन्ना अभिनेत्री अस्ति।

नारदः–अहं तु जाने देवी लक्ष्मीरेव क्षीरसिन्धौ शयानं भगवन्तं विष्णुं विहायात्र समागतेति।

पुरुषः –इतः पश्य। अयं राजकपूरो गायन् नृत्यति।
(नेपथ्ये 'जिस देश में गङ्गा बहती है' इतिगीतं श्रूयते)

नारदः–देशगौरवं प्रख्यापयन्नयं गीतध्वनिरतीव मधुरो वर्त्तते।
वत्स ! अहमपि गातुमिच्छामि। (उत्थाय)
'देशे तस्मिन् निवसामो वयम्, यस्मिन् देशे गङ्गा वहति।
यस्मिन् देशे गङ्गा वहति, तस्मिन् देशे निवसामो वयम्॥
(गायन् नृत्यति)

पुरुषः –महात्मन् ! त्वं नारदोऽसि, स्वर्लोकादागतोऽसि। तदिह ऋजु-वृत्त्या तिष्ठ। अन्यथा एते आरक्षिपुरुषास्त्वामुन्मत्तं गुप्तचरं वा ज्ञात्वा ग्रहीष्यन्ति। इयं दिल्ली नगरी, अत्र गृहीतस्य ते मुक्तिर्न भविष्यति।

नारदः—त्वं सत्यं ब्रवीषि । यत्र हेममालिनी-वैजयन्तीमाला-श्रीदेवी-सदृश्योऽप्सरसः सन्ति तत्र गृहीतस्य वीतरागस्य मे मुक्तिः कथं सम्भवा ? अस्तु अहमन्यत्र गच्छामि ।

(दूरादागच्छन्तं कोलाहलमाकर्ण्य)

नारदः—भद्र ! किमिदम् ?

पुरुषः —मन्ये, सुरक्षाकर्मिभिः परिवृतः प्रधानमन्त्रिमहोदयः स्वं कार्यालयं गच्छति । तदेष तदनुयायिनां विशिष्टजनानां सुरक्षाकर्मिणां च कोलाहलः ।

नारदः—किं भारतस्य प्रधानमन्त्री सुरक्षायामेव वहिर्निर्गच्छति ?

पुरुषः —अथ किम् ? प्रधानमन्त्रिणः सुरक्षाया दृढतरा व्यवस्था विद्यते । असौ यत्र गच्छति, गुलिकाशौचेन (Bullet proof) यानेन गच्छति, गुलिकाशौचं वस्त्रं परिधत्ते, गुलिकाशौचे स्थाने तिष्ठति । तत्र सर्वेषां गतिर्न ।

नारदः—यत्र प्रधानमन्त्रिण इयं दशा तत्र जनानां सुरक्षा कथम् ? अहो ! भारतस्येयं दशा यत्र प्रधानमन्त्रिणोऽपि प्राणाः प्रतिक्षणं संशयमारूढाः सन्ति । सोऽपि सुरक्षितो न । भवतु, अहमितोऽन्यत्र गच्छामि ।

(नारायण, नारायणेति गायन् किञ्चिद् दूरं गत्वा मध्ये आकाशवाणीयन्त्रं निधाय 'नागिन' इति चित्रस्य 'मन डोले, मेरा तन डोले' इति गीतं ध्यानतः शृण्वतो जनानुपगम्य) ।

नारदः —वत्साः ! यूयं कुत आयान्तमिमं मधुरं संगीतध्वनिं शृणुथ ?

एकः पुरुषः—महात्मन् ! इयमाकाशवाणी विद्यते । इत एवायं मधुरगीतध्वनिर्निर्गच्छति । तत् तूष्णीं स्थित्वा गीतं शृणु, मा अन्तरा प्रतिवधान ।

(नारदः सानन्दं सभावाभिनयं च गीतं शृणोति)

नारदः–(संगीतावसाने पुरुषं प्रति) वत्स ! अतीव मनोमोहकं गीतमिदम् । स्वर्लोके सुदुर्लभमेतादृशं मधुरं संगीतम् । तदहमिदमाकाशवाणीयन्त्रं स्वर्लोकं नेष्यामि, तत्र मधुरंगीतस्यास्य प्रचारं च करिष्यामि । स्वर्लोके एतादृशा बहवः प्रेमिणः प्रेमिण्यश्च सन्ति, किन्तु कोऽपि तेषु एतादृशं गीतं गातुं न जानीते ।

वत्स! पूर्वं तु आकाशवाणी देवानामेवाधिकारस्य विषय आसीत् । त एव यदा कदा आकाशवाणीं कुर्वते स्म । इदानीमाकाशवाणी मानवानां हस्ते स्थिता; अतो मर्त्यलोकोऽयं स्वर्गाद् गुरुतरः ।

पुरुषः –महात्मन् त्वं स्वर्लोकस्य वार्तां कुरुषे । त्वं कोऽसि ?

नारदः–अहं नारदोऽस्मि । भारतवर्षं द्रष्टुमहं स्वर्लोकतो मर्त्यलोकमागतोऽस्मि । तदिदानीं तीर्थराजं प्रयागं प्रति प्रस्थितोऽहम् ।

(सहसा आकाशे समुत्थितं महान्तं गड़गड़ाध्वनिमाकर्ण्य विलोक्य च)

वत्स ! एष महान् ध्वनिः कुतः श्रूयते ?

पुरुषः –एतद् (Rocket) रॉकेटमस्ति । मुखाद् धूमनिचयं विकिरन्महता वेगेन आकाशमार्गेण गच्छति । तस्यैव ध्वनिरयम् ।

नारदः–त्वं रॉकेट इति अभारतीयां भाषां वदसि । भारतीयां भाषां वद रॉकेट इति कः पदार्थः ?

पुरुषः –एष अग्निबाणोऽस्ति । युद्धक्षेत्रे प्रक्षेपास्त्रप्रक्षेपणे तथाऽन्तरिक्षे सैटेलाइटस्य (Satellite) प्रक्षेपणे अस्योपयोगो भवति ।

नारदः–पुनस्त्वमभारतीयां भाषां ब्रूषे सैटेलाइट इति । इदं सैटेलाइट किमस्ति ?

पुरुषः –एष उपग्रहः कथ्यते । एतेन मनुष्यो ग्रहाणां समीपं गन्तुं शक्नोति । अधुना वैज्ञानिका उपग्रहेण चन्द्रलोकं गत्वा, तत्रत्यानि वस्तून्यादाय प्रत्यावृत्ताः सन्ति । ते अन्येषां ग्रहाणां समीपमपि गन्तुं यत्नवन्तः सन्ति । एष मर्त्यानामन्तरिक्षविजयो भविष्यति ।

नारदः—आश्चर्यमिदम् महदाश्चर्यमिदम्। पूर्वं तु मर्त्या मृता एव चन्द्रलोकं सूर्यलोकं स्वर्लोकं वैकुण्ठलोकं वा गच्छन्ति स्म। इदानीं ते सजीवा एव गच्छन्ति ततः प्रत्यागच्छन्ति चेत्यश्रुत-पूर्वोऽयं वृत्तान्तः। अस्माभिर्ग्रहाणामुपग्रहाणां च स्थितिरन्तरिक्ष-एव दृश्यते। मर्त्यलोके उपग्रहाणां निर्माणं भवति, तेन भूत-लवासिनो ग्रहाणां समीपं गच्छन्ति, तत्रत्यानि वस्तून्यानयन्ति चेति ज्ञात्वा देवाः सत्यं विस्मिता भविष्यन्ति। अहं तु सर्वमेतद् दृष्ट्वा विभ्रान्तोऽस्मि। तदिदानीं तीर्थराजं प्रयागं प्रति प्रस्थितोऽहम्।

पुरुषः—महात्मन्! तव पार्श्वे पणकानि न सन्ति। त्वं पणकैर्विना दूर-दूर स्थानानां यात्रां कथं करोषि। भारते तु यानाधिकारिणः साधु-महात्मतोऽपि पणकान्याहरन्ति।

नारदः—वत्स! त्वं न जानासि मम काष्ठनिर्मितायामस्यां चरणपादु-कायां तवाग्निवाणतोऽप्यधिकतीव्रगतिकं मनोयन्त्रमस्ति। तद्धि यथायथा मे मनसोऽभिलाषस्तथा तथा मां नयति। तेन यन्त्रे-णाहं क्षणेन स्वर्लोकम्, क्षणेन मर्त्यलोकम्, क्षणेन च पाताल-लोकं प्राप्नोमि। तदेतेन यन्त्रेणाहं शीघ्रमेव प्रयागं प्राप्स्यामि। (नारायण, नारायणेति गायन् निर्गच्छति)

:—:o:—:

## चतुर्थं दृश्यम्

(स्थानम्—तीर्थराजः प्रयागः। एकं चलचित्रभवनम्। तत्र संगमेत्याख्यं चित्रं द्रष्टुमुपस्थितानां जनानां महान् समवायो दृश्यते। नारदः नारायण, नारायणेति गायन् प्रविशति। तं महान्तं जननिवहं दृष्ट्वासौ कौतुकात् तत्र गच्छति।)

नारदः—(प्रवेशचीटिकां क्रेतुं वर्तमानं कमपि पुरुषं प्रति) वत्स ! अस्मिन् स्थाने एष जनसम्मर्दः कथं दृश्यते ?

पुरुषः—एतत् चलचित्रभवनम्। अत्र संगमेत्याख्यं चित्रं प्रदर्श्यते। लोकप्रियमेतच्चित्र द्रष्टुमुत्सुकानां जनानां एष समवायः।

(नेपथ्ये गीतध्वनिः श्रूयते—'तेरे मन की गङ्गा और मेरे मन की यमुना का बोल राधा बोल संगम होगा कि नहीं. इत्यादि।)

नारदः—(गीतं श्रुत्वा) वत्स ! तीर्थराजे प्रयागेऽस्मिन् गङ्गायमुनयोस्तथाऽन्तः सलिलायाः सरस्वत्याश्च संगमोऽस्ति। तं द्रष्टुं तत्र स्नातुं वा जनानामेष संमर्दो न दृश्यते। किन्तु त्रिवेणीसंगमस्थाने तीर्थराजे प्रयागेऽस्मिन् मनसो गङ्गाया मनसो यमुनायाश्च संगमोऽयं कीदृशः यो राधां प्रति पृच्छ्यते गीतेऽस्मिन्, यं च द्रष्टुमेष महान् जननिवहः समुत्सुकोऽस्ति ?

पुरुषः—महात्मन् ! चलचित्रमेतत्। चलचित्रे सर्वेषां संगमः सम्भवति। किं त्वया चलचित्रं न दृष्टम्। नो चेत् लोचनैर्वञ्चितोऽसि।

नारदः—अस्माभिः स्वर्लोके चित्रं तु दृश्यते, किन्तु तत्र चलच्चित्रं नावलोकितमस्माभिः।

पुरुषः—महात्मन् ! त्वमत्र मर्त्यलोके स्थितः स्वर्लोकस्य वार्तां करोषि। कोऽसि त्वम् ?

नारदः—भद्र ! स्वर्लोकादागतो नारदनामा मुनिरहम्। भारतीयं वृत्तान्तमवगन्तुं विष्णुना प्रेषितोऽहं भारतं द्रष्टुमागतोऽस्मि। तदहमपि चलचित्रं द्रष्टुमिच्छामि। ततोऽहमितः स्वर्लोकं गत्वा तत्र चलचित्रस्य प्रचारं करिष्यामि।

पुरुषः—पणकानि सन्ति ?

नारदः—पणकानि तु न सन्ति। किन्तु त्वं मे प्रियो भक्तस्त्वमेव स्वपणकैर्मां चलचित्रं दर्शय।

पुरुष:—(नारदं निरीक्ष्य) आम्, ज्ञातम्। छद्मवेषधारी त्वं कश्चन मम सजातीयो जनः प्रतिभासि। तदिह तिष्ठ। पश्य स्वकर्म-कौशलेनाहं पणकान्याहरामि।

नारदः—भद्र ! अहं तव सजातीयः कथम्, तव कर्मकौशलं च किम् ?

पुरुषः —अहमिह चलचित्रं द्रष्टुं नागतोऽस्मि। अहं पाटच्चरो ग्रन्थि-भेदको वाऽस्मि। मुनिवेषधारी त्वमपि तथैव प्रतिभासि। अहमत्र चित्रं द्रष्टुमागतानां केषाञ्चन ग्रन्थिभेदनं कृत्वा तेषां धनान्यपहृत्य तैरेव धनैश्चलचित्रं पश्यामि, सुखेन कालं च नयामि। तत् त्वामपि तैरेव पणकैश्चलचित्रं दर्शयामि। अत्र क्षणं तिष्ठ। पश्य मे कर्मकौशलम्।

नारदः—भद्र ! इदं पापकर्म कर्तुं त्वामहं नानुमंस्ये। तीर्थस्थाने त्वमिदं कर्म कुरुषे, त्वं धिक्कार्योऽसि।

पुरुषः —महात्मन् ! मम सजातीयस्यापि तवैष शिरोभ्रमः। तीर्थस्थाने-ष्वेव त्विदं कार्यं सुकरम्। तीर्थराजं प्रयागम्, काशीम्, मथुराम्, अवन्तिम्, हरिद्वारम्, वैद्यनाथम्, विन्ध्याचलं वा यत्र कुत्रापि गच्छ त्वं तत्र मम सजातीया विद्यन्ते। तीर्थस्थानेषु ते पण्डरूपेण, महत्सु जनसम्मर्देषु च ते मादृशपाटच्चररूपेण सन्ति। त्वं मया सह कानिचिद् दिनानि सङ्गतिं कुरु। त्वमपि कलायामस्यां प्राप्तनैपुण्य इदानीं मर्त्यलोके, पश्चादितो गतः स्वर्लोके क-लयाऽनया वर्त्तयन् सुखेन कालं नेष्यसि।

नारदः—त्वमेवानया गर्हितया कलया वर्त्तयन् संगमचित्रं पश्य, सुखेन कालं नय। अहं त्रिवेणीसंगमं द्रष्टुं तत्र स्नानं कर्तुं गच्छामि। ततश्चाहं काशीं गमिष्यामि।

पुरुषः —महात्मन् ! त्वं भ्रान्तोऽसि। कला कापि गर्हिता न भवति; यदि तया जीवननिर्वाहः क्रियते। कला तु जीवनायैव भवति। चौर्यकला तु स्वयं भगवता कृष्णेनाऽप्युपासिता। अस्यां कला-यामसाधारणकुशलोऽसौ चौराग्रगण्यत्वेन स्तूयते। द्वापरयुगं तु कलाया अस्याः समुज्ज्वलमुदाहरणम्। महाभारते आचार्य-

पुत्रोऽश्वत्थामा चौर्यकलया रात्रौ पाण्डवानां शिविरं प्रविश्य तत्र सुप्तानां पाण्डवसुतानां वधमकार्षीत् । अस्य कर्मणो महामुनिर्व्यासः साक्षी । एवमेव महापुरुषैः समाश्रितेयं कला कदापि गर्हिता न । 'महाजनो येन गतः स पन्थाः' इत्युक्तमेव ।



स्वयं हि भगवान् कृष्ण उपदेष्टाऽस्य कर्मणः ।
अनुयायिनश्च कृष्णस्य पापभाजो वयं नहि ॥७॥
अश्वत्थाम्नाऽपि चौर्येण पाण्डवानां सुता हताः ।
जहार रावणः सीतां समाश्रित्य कलामिमाम् ॥८॥
अतः परम्पराप्राप्तं चौरकर्मात्र भारते ।
वर्त्तते निन्दनीयं न महद्भिः सुप्रतिष्ठितम् ॥९॥

नारदः—त्वं कृष्णस्याश्वत्थाम्नश्च एकमेव पक्षं पश्यसि । अनया कलया त्वं कृष्णमश्वत्थामानं वा नानुकर्तुं शक्नोषि। पश्य, कला जीवनोपयोगिनीति सत्यम्, किन्तु तया परस्याहितं कृत्वा स्वार्थसिद्धिः क्रियते चेत् तदा सा विनिन्दिता । चौर्यकला गर्हितकलाऽस्ति ।

पुरुषः—महात्मन् ! तवोपदेशोऽयं मे न रोचते । तद् गच्छ त्वं यथासुखम् । व्यापृत्तोऽहमिदानीं स्वकर्मणि निरायासे ।

नारदः—तथास्तु । (उभौ निष्क्रान्तौ)

:—:०:—:

## ॥ द्वितीयोऽङ्कः ॥

### प्रथमं दृश्यम्

(स्थानम्—काशीमार्गः । सन्ध्यासमयः । नारायण, नारायणेति गायन् नारदः प्रविशति ।)

नारदः—(पुरतो मन्दिरमेकं विलोक्य) शून्यमिदं देवायतनम् । उपस्थिता रजनी । तदत्रैवाहमद्यतनीं निशां नयामि । किन्तु मम पार्श्वे

भगवतो रजतमयी मूर्तिरस्ति। दृष्ट एव मया तीर्थराजे प्रयागे चौराणां क्रियाकलापः। अतस्तां रजतमयीं मूर्तिमादाय रात्रावेकान्ते स्थितिर्मे नोचिता। भारतवर्षमिदानीं किमपि नवीनं सञ्जातमस्ति। अधुना त्वत्र तीर्थस्थानेऽपि पदे पदे धूर्ताः, प्रवञ्चकाश्चौराश्च सुलभाः सन्ति। ते मादृशानपि साधुवृत्तीन् जनानतिसन्धातुमुद्यताः सन्ति। तदन्यत्र गच्छामि। (पुरत एकं भव्यं देवमन्दिरं दृष्ट्वा) इदमतीव रमणीयं देवमन्दिरं दृश्यते। तदत्र गत्वा देवपूजकं पृच्छामि अस्त्यत्र रात्रावतिथीनां स्थितेः प्रबन्धो न वेति। (मन्दिरं प्रविश्य, मन्दिरसोपानेऽवस्थितं करतले तमालपत्रं निधाय तन्मर्दने निरतं देवपूजकं प्रति) भद्र! अहमद्य रात्राविह मन्दिरे स्थातुमिच्छामि। श्वः प्रातरहं काशीं गत्वा गङ्गायां स्नात्वा श्रीविश्वनाथदर्शनं करिष्यामि।

पूजकः—(सहर्षम्) महात्मन्! इदं मन्दिरं सर्वजनसाधारणमाश्रमस्थानम्। तदत्र सुखेन तिष्ठ। अहमत्र एकाक्येव तिष्ठामि। त्वया सह कथाप्रसङ्गेन रात्रिमानन्देन नेष्यावः। महात्मन्! इदं तमालपत्रं गृहाण।

नारदः—भद्र! इदं तमालपत्रं किमस्ति ?

पूजकः—भूलोकस्येदमेकं महत्त्वपूर्णं वस्तु विद्यते। अत्र रहस्यं वदामि।

विडौजाः पुरा पृष्टवानब्जयोनिं धरित्रीतले सारभूतं किमस्ति।
चतुर्भिर्मुखैरित्यवोचद् विधाता तमालं तमालं तमालं तमालम्॥१०॥

नारदः—आः! एवं न्विदम्। तर्हि अहमप्यस्य सेवनं करिष्यामि। त्वं महापंडितः प्रतिभासि। इतः स्वर्लोकं गत्वाऽस्य प्रचारं करिष्यामि। देवा भूलोकस्य सारभूतस्यास्य वस्तुनोऽपरिचिताः सन्ति। तन्मह्यमपि स्तोकं देहि।

पूजकः—ददामि। पूर्वं तावदिदं शृणु। अत्र रात्रौ स्थितानां चौरभयं वर्त्तते। तत् तव पार्श्वे किमपि बहुमूल्यमस्ति चेत् तन्मह्यं दत्त्वा सुखं स्वपिहि।

नारदः—(पूजकस्य चेष्टया तं प्रति सन्दिग्धेन मनसा) भद्र ! मम पार्श्वे वीणा कमण्डलु कौपीनं चरणपादुकाञ्चातिरिच्य किमप्यन्यद् वस्तु न विद्यते। मादृशाः साधवो बहुमूल्यं वस्त्वादाय न परिभ्रमन्ति।

पूजकः—त्वं स्वर्लोकस्य वार्तां करोषि, मिथ्या च वदसि। त्वादृशा एव साधव इदानीमसाधुवृत्त्या व्यवहरन्ति, विचरन्ति च। तद् यदि त्वम् ऋजुवृत्त्या तद् वस्तु मह्यं न प्रयच्छसि तदा पश्य, अनया छुरिकया तवोदरं विदार्य धनं ग्रहीष्यामि। (छुरिकां दर्शयति)।

नारदः—(भयाद् वेपमानः) नहि, नहि, ममोदरं तव छुरिकायै न निर्मितम्। तच्छुरिकामिमां दूरीकुरुष्व। मम कण्ठलग्नायां पोटलिकायामेका रजतमयी भगवतो मूर्तिरस्ति। तां गृहाण, तया स्वं कार्यं निर्वर्त्तय। (पोटलिकां विमुच्य तस्मै तां मूर्तिं ददाति)।

पूजकः—(मूर्तिं हस्ते गृहीत्वा) त्वं साधुरसि। एतादृशं बहुमूल्यं वस्त्वादाय रात्रौ परिभ्रमसि। तदत्र रात्रौ निर्भयं तिष्ठ। अद्यतनं मम कार्यं सम्पन्नम्, गच्छाम्यहमिदानीं स्वावासस्थानम्।

नारदः—किं त्वमत्र रात्रौ न तिष्ठसि। त्वमस्य मन्दिरस्य देवपूजको नासि ?

पूजकः—जना मामस्य मन्दिरस्य देवपूजकमेव जानन्ति। किन्तु मम वृत्तिरपरैव। अहन्तु प्रतिदिनमिह भव्ये देवभवने रात्रौ विश्रामं कर्तुमागतं त्वादृशमेव धनवन्तं जनमेवं वञ्चयित्वा कुटुम्बभरणं करोमि।

नारदः—वत्स ! त्वद्वृत्तिरियं गर्हिताऽस्ति। साधुवृत्त्या देवपूजकाः स्वर्गं गच्छन्ति। त्वं कुवृत्त्याऽनया देवतां जनांश्च वञ्चयसि। तत् त्वं नरके पतिष्यसि।

पूजकः—त्वं स्वमुपदेशं स्वपार्श्वे रक्ष। अहं स्वर्गं नरकं वा किमपिनावगच्छामि। इयं मे कुलक्रमागता वृत्तिः। कुल परम्परा-

मत्से किमपि कर्म वर्जनीयं न भवति। महाकविकालिदासोऽप्येवं वदति–

'सहजं किल यद् विनिन्दितं न खलु तद् विवर्जनीयम्।
पशुमारणकर्मदारुणोऽप्यनुकम्पामृदुरेव श्रोत्रियः ॥११॥'

मम कुटुम्वमेव स्वर्गम्। अनया सहजया वृत्त्या कुटुम्वस्य परिपालनं कुर्वन्नहमिहैव स्वर्गसुखमनुभवामि।

नारदः–गच्छ, स्वर्गसुखमनुभव। अहमत्र रात्रौ स्थित्वा श्वः प्रातः काशीं गमिष्यामि।

पूजकः–काशीं गच्छ मथुरां वा गच्छ। किन्त्विदमवधारय, वृत्तमिदं कस्मैचिदपि न निवेदनीयम्। अन्यथाऽहं प्रातरागत्य तव सर्वं साधुत्वमपाकरिष्यामि।

नारदः–गच्छ! वृत्तमिदमावयोरेव मनसि स्थास्यति, नापरस्य कर्ण-कुहरे प्रवेशमाप्स्यति।
(पूजकः निष्क्रामति, त्वरितगत्या गच्छतस्तस्य हस्तान्मूर्तिर-सौ भूमौ पतति। स ससम्भ्रमं तामुत्थाप्य गोपायति। तथा कुर्वन्तं तं रक्षी पुरुषो गृह्णाति।)

रक्षी –पूजकजीव! अद्य किमपि लब्धं न वा? लब्धं चेत् तदर्धं मह्यं देहि।

पूजकः–मित्र! अद्य तु कश्चन साधुरेव हस्ते पतितः। अनुकम्पामृदुरसौ साधुर्मां दीनं भक्तं विज्ञाय मूर्तिमिमां स्वयमेव दत्तवानस्ति। (मूर्तिं दर्शयति)

रक्षी –(मूर्तिं विलोक्य) पूजकजीव! रजतमयी मूर्तिरियं वहुमूल्या विभाति। तदेहि मन्दिरं गच्छावः। तेन मूर्तिरियमुपकार-वुद्ध्या स्वयमेव तुभ्यं प्रदत्ता चेदत्र किमपि कथनीयं नास्ति। मूर्तिरियं तवैवास्तु। किन्तु त्वया आत्मनो वृत्त्या साधोर्मूर्ति-रियं गृहीता चेदस्यामहमपि भागभाग् भविष्यामि।

पूजकः–तथास्तु। (उभौ मन्दिरं गच्छतः)

रक्षी –(सुप्तं नारदं प्रबोध्य) महात्मन् ! त्वं वञ्चितोऽसि पूजकेनानेन। महान् धूर्तोऽयं पूजकस्त्वत्तो मूर्तिमिमां, भयं प्रदर्श्य गृहीतवानस्ति। किमिदं सत्यम् ?

नारदः–भद्र ! पूजकजीवोऽयं दीनहीनो भक्तोऽस्ति। अहमस्य शुश्रूषया सुप्रसन्नो दारिद्र्योपेताय अस्मै मूर्तिमिमां स्वयं प्रदत्तवानस्मि, यदयं मूर्तिमिमां विक्रीय स्वकुटुम्बस्य भरणपोषणं करोतु। तदयं प्रियभक्तो मे भवतोऽप्यनुकम्प्योऽस्ति। कृपया त्यज्यतामयम्, अन्यथा अस्य कुटुम्बं महति सङ्कटे पतिष्यति।

पूजकः–(नारदस्य पादयोः पतित्वा) महात्मन् ? क्षम्यतामपराधोऽयं नराधमस्यास्य। मया भवतो महानपकारः कृतः। मूर्तिरियं मया छुरिकाभयं प्रदर्श्य भवतो बलादपहृताऽस्ति, तथापि भवान् एतावान् दयालुर्भवतीत्याश्चर्यम्। एतादृशो दिव्यगुणो देवतास्वेव दृश्यते न मानवेषु। भवतः साधुवृत्त्याऽनया प्रभावितस्य दुर्वृत्तस्य मे मनसो दुर्वृत्तिरपसरति। इदानीं मे हृदयपरिवर्त्तनं जातम्। तदहमितः प्रभृति वृत्तिमिमां परित्यज्य भवतः सेवायां स्थास्यामि। तन्मामप्यात्मना सह नय, नान्यथा तव चरणौ त्यक्ष्यामि। (पुनः पादयोः पतति)

नारदः–वत्स ! उत्तिष्ठ। त्वमात्मनो मनसो दुर्वृत्तिमिमां दूरीकृत्य श्रद्धया विश्वासेन च मन्दिरेऽस्मिन् भगवतः शङ्करस्य पूजां भक्तिं च कुरु। भगवतस्त्रिलोकनाथस्यानुकम्पया तव सर्वं सुलभं भविष्यति। त्वमिहैव कुटुम्बस्य भरणपोषणं कुर्वन् स्वर्गसुखमनुभव।

रक्षी –(नारदस्य पादयोः पतित्वा) महात्मन् ! अहमपि दुर्वृत्त एव। शासनेनास्य मन्दिरस्य रक्षाकर्मणि नियुक्तोऽहमपि पापात्मनाऽनेन पूजकेन सहात्र रात्रौ स्थितोऽस्य पापकर्मणि सहायको भवामि। प्रतिनिशमेष इत्थमेवात्र रात्रौ स्थितानामतिथीनां धनमपहरति, तदर्धं च मे प्रयच्छति। अद्य भवतो दिव्यवृत्तिमिमामवलोक्य ममापि हृत्परिवर्त्तनं जातम्। तदहमपीतः प्रभृति गर्हितां वृत्तिमिमां परित्यज्य भवतः सेवायां कालं नेष्यामि। तदनुगृह्णातु भवान् मामनयाऽहेतुक्या कृपया।

देवोपमगुणोपेतो भवान् क इति ज्ञातुमुत्सुकोऽयं जनः स्वपरिचय प्रदानेनानुगृह्यतामित्यनुरोधः।

नारदः—अहं स्वर्लोकाद् भारतवर्षमिदं द्रष्टुमागतो नारदोऽस्मि। आगत्य समस्ते भारतभूभागे भ्रमन्नहं भारतस्य परिवर्त्तितां विचित्रां स्थितिं विलोक्य सत्यमेव भ्रान्तोऽस्मि। अद्य मया यदिह दृश्यते तत् पूर्वमत्र कृतयुगे, त्रेतायां, द्वापरे वा नासीत्। तदानीन्तनं भारतमिदमिदानीं किञ्चिदपरमिव सञ्जातमस्ति। भवन्त इव स्वार्थलोलुपाश्छलप्रपञ्चेन स्वकार्यसाधकाः स्वर्गेऽपि सन्ति, किन्त्वेतादृशं हृदयपरिवर्त्तनं तेषु क्वापि न दृष्टम्, यादृशमद्य मया भवत्सु प्रत्यक्षीकृतम्। तद् भारतवर्षमिदं स्वर्लोकाद् गुरुतरम्।

(रक्षिणं प्रति) प्रियवत्स! त्वया स्वकीयोऽपराधोऽङ्गीकृत इति धन्योऽसि त्वम्। सत्येन मनसा अपराधस्वीकृतिरेवापराधान्मुक्तिरस्ति। तद् युवां यस्मिन् कर्मणि नियुक्तौ तत् कर्म युवाभ्यां कर्तव्यबुद्या श्रद्धया कर्त्तव्यम्। कर्त्तव्यमेव धर्मः। भगवतः श्रीकृष्णस्य मुखान्निःसृताऽमृतवाणी गीतापीदमेव कर्त्तव्यपालनमुपदिशति। कर्त्तव्यरूपस्य धर्मस्य परिपालनमेव स्वस्य, स्वपरिवारस्य, स्वसमाजस्य, स्वदेशस्य, सम्पूर्णमानवतायाश्च कल्याणाय कल्पते। तद् गच्छतम् स्वे स्वे कर्मण्यभिरतौ सुखेन कालं नयतम्। अहं भगवतः शङ्करस्य प्रियनगरीं काशीं गत्वा तत्र श्रीविश्वनाथं द्रष्टुमिच्छामि।

(नारायण, नारायणेति गायन् निर्गच्छति)

—:०:—

## तृतीयं दृश्यम्

(स्थानम्—श्रीविश्वनाथमन्दिरम्। महाशिवरात्रिमहोत्सवे श्रीविश्वनाथं द्रष्टुमागतानां शिवभक्तानां महान् सम्मर्दः। रक्षापुरुषा एकैकमेव जनं क्रमशः मन्दिरे प्रवेशयन्ति। नारदः 'नारायण, नारायणेति गायन् मन्दिरद्वारमुपागतः प्रवेशक्रमं तमजानन्

उत्क्रममेव मन्दिरं प्रवेष्टुमिच्छति । कश्चन हृष्टपुष्टः पण्डस्तं-गृह्णाति ।)

पण्डः –(नारदं गृहीत्वा) महात्मन् ! इदं प्रवेशद्वारं न । इदन्त्वद्य निष्क्रमणद्वारम् । यदित्वं भगवन्तं द्रष्टुमिच्छसि तदा ज्ञानवापी-मार्गेणागच्छ, पङ्क्तिबद्धक्रमे तिष्ठ । नान्यथा दर्शनं कर्तुं मर्हसि ।

नारदः–भद्र ! मया ज्ञानवापीमार्गो दृष्टः । तत्र दर्शनार्थिनां महती पङ्क्तिर्भगवन्तं विश्वनाथं द्रष्टुं प्रतीक्षते । तत्र मादृशस्य साधुजनस्य निर्वाहो न ।



पण्डः –तत् तव विश्वनाथदर्शनं दुर्लभम् ।

नारदः–वत्स ! कश्चिदपरः उपायश्चेद् ब्रूहि, येनाहं शीघ्रं दर्शनं कृत्वा विष्णुलोकं प्रयामि । तत्र भगवान् विष्णुर्मां प्रतीक्षते ।

पण्डः –( सविस्मयमवलोकयन् ) त्वं शीघ्रं दर्शनं कृत्वा विष्णुलोकं प्रयातुमिच्छसि ? तत्र भगवान् विष्णुस्त्वां प्रतीक्षते ? कस्त्वम् ?

नारदः–वत्स ! अहं नारदोऽस्मि, भारतं द्रष्टुमायातोऽस्मि ।

पण्डः –(निपुणं निरूप्य) त्वं नारदोऽसि ? ज्ञातं मया तव नारदत्वम् । त्वादृशा एव छद्मवेषधारिणः पुरुषा मन्दिरं प्रविश्य, मन्दिरे सुरक्षितं धनमभिज्ञाय रात्रौ दस्युवृत्त्या तद्धनमपहरन्ति । इतः कतिचिद् दिनानि पूर्वमत्र मन्दिरे चौरैर्यत् सुरक्षितं धन-मपहृतं तत् त्वादृशामेव छद्मवेषधारिणां कर्म प्रतिभाति । तत् त्वामहं रक्षिपुरुषैर्ग्राहयिष्यामि ।

नारदः–भद्र ! किं मन्दिरं कोषागारो यदत्र धनं निधीयते ? भवतु, मन्दिरे चौर्यं गर्हितं वृत्तम् । अहमितो विष्णुलोकं गत्वा भगवते विष्णवे सर्वमेतत् प्रतिवेदयिष्ये ।

पण्डः –त्वं कुत्रापि प्रतिवेदनं कुरु; प्रतिवेदनेन किमपि न सेत्स्यति । भगवतो विश्वनाथस्य दर्शनं कर्तुमिच्छसि चेत् पङ्क्तिक्रमेणा-गच्छ । शीघ्रं दर्शनं कर्तुमिच्छसिचेत् पञ्चरूप्यकाणि निष्कास्य मम हस्ते निधेहि, दर्शनं सुकरं भविष्यति ।

नारदः–किं भगवतो दर्शनमपि व्ययसाध्यमस्ति ?

पण्डः –सर्वमपि कार्यं व्ययसाध्यमस्ति, यदि तत् शीघ्रतरं सम्पादनीयमस्ति । कार्यालये, देवालये वा सर्वत्रैव स्थितिः । तच्छीघ्रतां कुरु ।



नारदः–वत्स ! मम पार्श्वे रूप्यकाणि न सन्ति ।

पण्डः –त्वं भारतदर्शनयात्रायां निर्गतः । विष्णुना प्रहितोऽसि । किं त्वया विष्णुतो यात्राव्ययो न गृहीतः ?

नारदः–गृहीत आसीत् । किन्तु त्वादृशैरेव तीर्थध्वाङ्क्षैर्भक्षितः सः । तदहं दर्शनमकृत्वैव विष्णुलोकं गच्छामि । इदं भारतं तत् पुरातनं भारतं न । अद्य त्वत्र मादृशाः साधवः सन्तश्च आतङ्कवादित्वस्य साम्प्रदायिकत्वस्य चाशङ्कया परीक्ष्यन्ते, अवमान्यन्ते, निगृह्यन्ते, दण्ड्यन्ते च । तदहं द्रुततरं गत्वा सर्वमेवात्रत्यं वृत्तान्तं भगवते विष्णवे प्रतिवेदयामि ।

नारदः–( पुरतः कक्षे एकस्मिन् दूरभाषेण वार्त्तालापं कुर्वन्तं मनुष्यं वीक्ष्य) वत्स ! असौ पुरुषः कर्णे किमपि कृत्वा 'हलो-हलो' इति ब्रुवन् स्वयमेव प्रश्नान् उत्तरांश्च ब्रवीति, तत् किमेतत् ?

पुरुषः –महात्मन् ! दूरभाषयन्त्रं तत् । तेन मनुष्यः स्वगृहे एव स्थितो दूरस्थैर्जनैः सह वार्त्तालापं कर्तुं शक्नोति ।

नारदः–तत् किमहमप्यत्र स्थितो वैकुण्ठवासिना विष्णुना सह वार्त्तालापं कर्तुं शक्नोमि ?

पुरुषः –महात्मन् ! मर्त्यलोकवासिनामेष विषयः, न तु स्वर्लोकवासिनाम् ।

नारदः–वत्स ! अत्र धूमयान-वायुयान-तडिच्छकट-स्वनग्राहाकाशवाणी-चलचित्र - दूरदर्शन - दूरभाषाग्निवाणोपग्रहादीनां वैज्ञानिकाविष्काराणां कथां श्रुत्वा मनो मे विभ्रान्तमिवास्ते । एष मर्त्यलोको धन्यः । यूयं भारतवासिनोऽपि धन्याः । भारतभूमिरियं वस्तुतः कर्मभूमिरस्ति ।

(नारायण, नारायणेति गायन् निर्गच्छति)

–:०:–

## चतुर्थं दृश्यम्

(स्थानम्—विष्णुलोकः। भगवान् विष्णुर्लक्ष्म्या सहोपविष्टो दृश्यते। जयो विजयश्च प्रतीहारे स्थितौ। नारदः नारायण, नारायणेति गायन् प्रविशति। विष्णुर्लक्ष्मीश्च तस्य स्वागतं कुरुतः।)

विष्णुः–(उत्थाय) आगच्छतु महामुने! विष्णुरहं सपरिवारो भवन्तमभिवादये।

नारदः–(बद्धाञ्जलिः सन्) एष नारदोऽपि भवन्तावुभौ सादरं प्रणमति।

विष्णुः–मुनिवर! आसनमिदमलं क्रियताम् (आसनं निर्दिशति। नारदे आसनं गृहीतवति विष्णुर्लक्ष्मीश्च यथास्थानमुपविशतः।)

विष्णुः–इदानीमहं भारतस्य वृत्तान्तमवगन्तुमिच्छामि। तद् यथादृष्टं निवेदयतु भवान्।



नारदः–भगवन्! भारतवर्षस्य सकलं वृत्तान्तं प्रत्यक्षीकर्तुमादिष्टोऽहं भवता प्रथममहं पर्यायक्रमेण सर्वेषां धर्माणां धर्मस्थानानां धर्माधिकारिणां सम्प्रदायानाञ्चं स्थितिं निरीक्षितवान्। अस्मिन् निरीक्षणक्रमे मे मनसि महान् खेदोऽजायत। भारते शासनेन धर्मनिरपेक्षता उद्घोषिताऽस्ति। किन्तु धर्मः स्वकर्तव्यमेवेत्यनवगच्छद्भिर्जनैर्धर्मरूपस्य स्वकर्तव्यस्यैव निरपेक्षताऽङ्गीकृता। परिणामतः कार्यालये, देवालये, शिक्षालये, अन्यत्रापि च कर्त्तव्यपालनमुपेक्षितं विद्यते। साधूनां संन्यासिनां महात्मनां च परीक्षणं क्रियते। ते आतङ्कवादिन इति प्रख्याय निगृह्यन्ते दण्ड्यन्ते च। धर्मस्य स्थितिमिमां वीक्ष्याहन्तु क्वचित् क्वचिद् विभ्रान्त इवाभवम्–यदिदं तदेव पुरातनं भारतं वर्षमुत किञ्चिदपरं वर्षं सञ्जातमस्ति।

विष्णुः–इयं धर्मनिरपेक्षता मे न रोचते। धर्मसापेक्षता कर्त्तव्यपरायणताऽस्ति। इतो विपरीता धर्मनिरपेक्षता राष्ट्रकल्याणाय न सम्पत्स्यते। मया गीतायां 'स्वे स्वे कर्मण्यभिरतः संसिद्धि लभते पराम्' इत्याद्युक्तवता कर्त्तव्यपरायणतैव धर्मत्वेनोपदिष्टा। अस्तु, भारते साम्प्रदायिकता का?

नारदः—साम्प्रतं भारते मुख्यतः सम्प्रदायत्रयम् — हिन्दुसम्प्रदायः, मुस्लिमसम्प्रदायः, ईसाईसम्प्रदायश्चेति । हिन्दुसम्प्रदायस्यैव एकमभिन्नमङ्गमिदानीं सिक्खसम्प्रदायः स्वपृथक् स्थितिमभिवाञ्छति । एषु सम्प्रदायेषु परस्परं सौमनस्यं नास्ति । स्वसम्प्रदायस्यैव सर्वोत्कृष्टत्वेन स्वीकरणं तथाऽपरसम्प्रदायं प्रति विरोधः साम्प्रदायिकता कथ्यते । शासनेन साम्प्रदायिकताया उन्मूलनाय यथा यथा प्रयत्नो विधीयते तथा तथैवेयं विवर्द्धते ।

विष्णुः—इयं स्थितिरपि समीचीना न ।

नारदः—अस्मिन् व्यतिकरे मया शुभलक्षणमेकं दृष्टम् । दूरदर्शनेन भवतश्चरितानि प्रदर्श्यन्ते । भारतीयैर्विदेशिभिश्चापि पूर्वं रामायणं दृष्टम् । इदानीं ते महाभारतं पश्यन्ति । सर्वे भारतीया अभारतीयाश्च श्रद्धया, भक्त्या, परमौत्सुक्येन च भवतः पावनचरितानां दर्शनं कुर्वन्ति । एतादृशदर्शनेन जनमानसेषु एका नवीना लोकहितकारिणी सांस्कृतिकी जागर्तिरुत्पत्स्यते इति सम्भावये ।

विष्णुः—अस्तु, तत्र सुखशान्तेः का स्थितिरिति प्रोच्यताम् ।

नारदः—भगवन् किं वर्णयामि ! अहन्तु तत्र धूमयान-वायुयान-तडिच्छकट-स्वनग्राहाकाशवाणी-चलचित्र-दूरदर्शन-दूरभाषाग्निवाणोपग्रहादीनां साम्प्रतिकाविष्काराणां भारतीयजीवने प्रभावात् तज्जनित परिवर्त्तनानि च दृष्ट्वा सत्यं विभ्रान्तोऽस्मि यदिदं भारतवर्षं तदेव यदस्माभिः पूर्वयुगेषु दृष्टमथवाऽपरं किमपि जातमस्ति, तथा भारतीयानां जीवनं किं सुखमयं दुःखमयं वेति ।

विष्णुः—तथाप्यहं वस्तुस्थितिमवगन्तुमिच्छामि ।

नारदः—तच्छृणोतु भवान् । अद्य भौतिकयुगेऽस्मिन् सुखशान्तिः कुत्रापि न दृश्यते । यथा भारते तथैवान्यत्रापीयमेव स्थितिः । भूतले वैज्ञानिकाविष्काराणामद्भुतचमत्कारा दृश्यन्ते । तादृशवैज्ञानिकचमत्कारा अस्माकं स्वर्गेऽपि नावलोक्यन्ते । वैज्ञानिकसाध-

नानामाविष्कारा: सुखाय सम्पद्यन्ते, यदि तेषां सदुपयोग: क्रियते। महाभारतयुगवदिदानीं भूतले ज्ञानस्य ह्रास: विज्ञानस्य च ज्ञाननिरपेक्षो विकास: परां काष्ठां गतोऽस्ति। अहन्तु पश्यामि यद् भूतलेऽधुना वाहनानामस्त्रशस्त्राणां च यादृशं भयावहं वैज्ञानिकं निर्माणं सञ्जातमस्ति तादृशं महाभारतयुगेनासीत्। ज्ञानस्य दौर्बल्ये विज्ञानस्य च प्राबल्ये महाभारतं भवत्येव। भारतमत्र निर्णायकस्थलं भविष्यति युद्धे शान्तौ चेत्यहमवगच्छामि।

किं बहुना, युद्धस्य विभीषकया सर्वे मानवा: परित्रस्ता: सन्ति। मानवताया दौर्भाग्याद् युद्धं भवति चेत् सर्वा मानवजातिर्विनष्टा भविष्यति। तदत्र प्रतिविधेयमुत्तरं भवता विचिन्त्यताम्। मया तु भवत: आदेशं परिपालयता यथादृष्टं यथाश्रुतं तथा निवेदितम्। निवेदनं प्रतिवेदनं वा मादृशां कर्म। प्रतिविधानं तु भवादृशां प्रभूणां कर्म। अतोऽत्र प्रभविष्णवे यद्रोचते तद् विधीयताम्। यद्यपि धर्मस्य ग्लानिरधर्मस्याभ्युत्थानं वा भवतो दृष्टिं नैति तथा साधूनां परित्राणस्य दुराचारिणां विनाशस्य चावश्यकतामिदानीं न पश्यति भवान् तदा वैकुण्ठेऽस्मिन् सुखं शयानोऽवतारस्य समयोऽसौ प्रतीक्ष्यताम्। अहन्त्विदानीमपरत्र गच्छामि। (उत्थाय, अभिवाद्य च नारायण, नारायणेति गायन् निर्गच्छति।)

। जवनिकापात:।

॥ समाप्तमिदं डॉ० वनेश्वरपाठककृतं विभ्रान्तनारदं (नारदप्रतिवेदनं) नाम द्व्यङ्कं नाटकम् ॥



# लेखकस्य प्रमुखकृतय:



१) संस्कृतकाव्यसंग्रह: - रामनारायण लाल - बेनी प्रसाद,

२) काव्यसिद्धान्तकौमुदी (लक्षण ग्रन्थ:) - बागला प्रेस,

३) प्लवङ्गदूतम् (उत्तरप्रदेशशासनेन पुरस्कृतम्) - सु

४) कालिदासम् (नाटकम्) - कामेश्वरसिंहदरभङ्गा संस्कृतवि

५) तवास्मिदास: (खण्डकाव्यम्) - ज्योति प्रकाशनम्, राँची

६) कालिदास - साहित्यालोचन एवं समीक्षा - किशोर विद्यान

७) धर्ममीमांसा - ज्योति प्रकाशनम, राँची

८) हारोचरितम् (अभिनवं काव्यम्) - ज्योति. प्रकाशनम, राँची

९) विक्रान्तकर्णम् - ज्योति. प्रकाशनम, राँची

१०) विभ्रान्तनारदम् - ज्योति प्रकाशनम, राँची

११) कादम्बरी (नाटिका) - ज्योति प्रकाशनम्, राँची

१२) चाण्डालिका (नाटिका) - ज्योति प्रकाशनम, राँची

१३) यीशुचरितम् (बाइबिल-न्युटेस्टामेंट-ग्रन्थस्य संस्कृतपद्यानुवाद:) - सत्यभारती, राँची

१४) मम्मटाचार्यका काव्यप्रकाश और उसके टीकाकार (डी० लिट० उपाधिना सम्मानित: शोध प्रवन्ध:- प्रकाशनाधीन.)

१५) कालिदासीयम् (चरितकाव्यम्) - प्रकाशनाधीनम्

१६) पाणिनि की अष्टाध्यायी और उसके टीकाकार - यु०जी०सी० की योजना के अन्तर्गत रचनाधीन ।

१७) कालिदास - साहित्य एवं संदर्भ - ज्योति प्रकाशनम, राँची

कविता:, शोधप्रबन्धा:, रघुवंश - किरातार्जुनीय - कुमारसम्भव - स्वप्नवासवदत्त - तर्कसंग्रह प्रभृतीनां व्याख्याग्रन्थाश्च ५० तोऽप्यधिका प्रकाशिता: सन्ति । आकाशवाणीत: प्रसारितानां लघुकाव्यानां लेखानां वार्तानां च संख्या भूयसी ।